उत्क्रान्तेनोर्ध्वं गतेन यथाश्रुतं वा कस्मिन्नुत्क्रामति सति, उत्क्रान्तो भविष्याम्यूर्ध्वं गतः स्याम्। कस्मिन्वा कस्मिंस्तत्त्वान्तरे वाशब्दः क्रियान्तरनिर्देशार्थः। प्रतिष्ठितेऽवस्थिते। प्रतिष्ठास्यामि, अवस्थास्य इत्यनेन प्रकारेण विचिन्त्य प्राणस्य क्रिययाऽऽत्मनि क्रियामवलोक्य च ॥ ३ ॥

सोऽन्यक्रिययाऽऽत्मनि क्रियाकामी षोडशकलः पुरुषः प्राणमाधिदैविकं सर्वप्राणिसूत्रभूतमसृजतोत्पादितवान् ॥ तावता च संसारयात्राया निर्वाहमपश्यञ्छ्रद्धाद्या अप्यन्याः पञ्चदश कलाः ससर्जेत्याह—प्राणाद्युक्ताद्धिरण्यगर्भोद्भूतसूक्ष्मात्सर्वकारणाद्ब्रह्मणः प्रथमजाच्छ्रद्धामास्तिक्यबुद्धिमसृजतेत्यनुवर्तते ॥ इदानीं शेषाण्यपि गणयति—खं वायुर्ज्योतिरापः पृथिवी, स्थूलानि पञ्च महाभूतानि । इन्द्रियं मनः, भौतिकं ज्ञानकर्माख्यं चक्षुरादिकं वागादिकं च दशकमिन्द्रियं मनोऽन्तःकरणमन्नं प्रसिद्धं व्रीह्यादिकमदनीयमन्नादुक्ताद्वीर्यं शरीरेन्द्रियसामर्थ्यं तपः शरीरशोषणादिरूपं मन्त्रा ऋग्यजुःसामाथर्वाङ्गिरसः कर्म ज्योतिष्टोमादिरूपं लोकाः कर्मफलभूताः सोमलोकाद्या लोकेषु चोक्तेषु चशब्दादन्येष्वपि नाम [ च ] देवदत्तो यज्ञदत्त इत्यादि नामधेयम् ॥ ४ ॥

इदानीं पुरुषस्यास्य निमित्तमात्रत्वं न तूपादानत्वमितीमां शङ्कां वारयितुं दृष्टान्तेन षोडशकलाना पुरुष उपसंहारमाह—स दृष्टान्तः, यथा दृष्टान्त इमाः प्रत्यक्षा नद्यो गङ्गाद्याः सरितः स्यन्दमानाश्चलन्त्यः समुद्रायणाः समुद्रे गमनं यासां ताः समुद्रायणाः समुद्रं सिन्धुराज प्राप्य तादात्म्येन सबध्यास्तं गच्छन्ति अदर्शनं प्राप्नुवन्ति॥ अस्तगमन स्वयमाह—भिद्येते विनश्येते ता(स्यतस्ता)सां नदीना नामरूपे गङ्गेत्यादिकं नाम शुभ्रमधुरनीलत्वादिक रूप नाम च रूपं च नामरूपे। नामरूपभेदानन्तरं समुद्रः शब्दानुकरणमिति, अनुकरणार्थः । एवमनेन प्रकारेण प्रोच्यते प्रकर्षेण कथ्यते। एवमेवानेनैव प्रकारेणास्य षोडशकलस्य पुरुषस्य परिद्रष्टुः सर्वतः सर्वसाक्षिण इमाः प्राणाद्या नामान्ताः षोडश कला व्याख्यातम् पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चाऽऽसां नामरूपे पुरुष इत्येवं प्रोच्यते। समुद्रस्थले पुरुषेति तासामितिस्थले चाऽऽसामिति पाठतो विशेषः । ततः समुद्रनदीवाक्यवत्पुरुषकलावाक्यं व्याख्येयम्। नदीनां सर्वैः प्राणिभिः प्रत्यक्षीकर्तुमशक्यत्वात्तासामिति निर्देशः । कलानां च प्रतिप्राणिप्रत्यक्षत्वादासामिति । चकारः कैमुतन्यायार्थः । नदीनामसमुद्रजानामपि समुद्रे लयो दृष्टः किमुत पुरुषजानां कलाना पुरुषे लय इति । न चानेनैव निदर्शनेन पुरुषस्यानुपादानत्वं, लयमात्रस्य निदर्शनत्वात्। विवक्षितांशापरित्यागेनान्यत्र निदर्शनाङ्गीकारे सर्वत्रातिप्रसङ्गात्। स कलोपादान एष बुद्धेर्द्रष्टाऽकलो वस्तुतः कलारहितोऽ-

'भविष्यामि' इत्येतदग्र इतिशब्दोऽधिकः क्वचिन्मूले।

भूतोऽविद्याकामकार्यतत्संस्कारमरणहेतुशून्यो भवति स्पष्टम्। तदत्रस्मिन्नर्थे श्लोकोऽयमुदाहृतः । एष श्लोको [ व्याख्यातम् ] ॥ ५ ॥

अरा इव रथनाभौ व्याख्यात, कला यस्मिन्प्रतिष्ठिताः स्पष्टम् । तं कलाधारं वेद्यं वेदनीयं साक्षात्करणीयं पुरुषं परिपूर्णं वेद यथा हे शिष्या मद्वचनादवगच्छत । तान्ये यूयं महद्भ्यः स्वशिष्येभ्यो वेदयत ब्रह्मविद्यासंप्रदायं प्रवर्तयतेत्यर्थः । ब्रह्मविद्यासंप्रदायप्रवर्तनेऽस्माकं संसारो भविष्यतीति भीतिं मा कुरुत भवतामर्थं मया वरो दत्त इत्याह—मा वो मृत्युः परिव्यथा वो युष्मान्ब्रह्मविद्यासंप्रदायप्रवर्तकान्मृत्युर्विपरीतज्ञानरूपो मा परिव्यथा मा परिव्यथयतु । अथवा वेदयथ(था) जानीथ ॥ तज्ज्ञाने लाभमाह—वो ब्रह्मज्ञानिनो मृत्युर्मा परिव्यथाः ॥ इदानीं श्रुतिराह—इत्यनेन प्रकारेण ॥ ६ ॥

तान्भारद्वाजसत्यकामगार्ग्याश्वलायनवैदर्भिकात्यायनान्ह किलोवाचोक्तवानेतावदेवेत्थमेवाहं पिप्पलाद एतत्परं ब्रह्म व्याख्यातं वेद जानामि ॥ एवशब्दव्यावर्त्यं स्वयमाह—नातः परमस्ति, अतोऽस्मादुक्ताद्ब्रह्मज्ञानात्परमधिकं मम वाऽन्यस्य वा नास्ति [ इति श्लोकसमाप्तौ ] ॥ ७ ॥

एवं पिप्पलादेनोक्ते सति ते पिप्पलादशिष्या भारद्वाजादयस्तं स्वगुरु पिप्पलादमर्चयन्तो मनोवाक्कायैर्यथोचितं पूजयन्त इदमुक्तवन्त इत्याह—त्वं पिप्पलाद(दो) हि निश्चितं नोऽस्माकं भारद्वाजादीनां पिता जनकः । पितृत्व उपपत्तिमाह—यः प्रसिद्धो गुरुरस्माकं भारद्वाजादीनामविद्याया आवरणविक्षेपशक्तेः सर्वानर्थमूलायाः परं पारमगाधजलायाः सिन्धोरिव परतीरमविद्यालेशशून्यमानन्दात्मानमित्यर्थः । तारयसि दर्शयसि । इत्यनेन प्रकारेण । नमो नमस्कारः परमर्षिभ्य उत्कृष्टेभ्योऽतीन्द्रियब्रह्मविद्यासप्रदायकर्तृभ्यो ब्रह्मादिभ्यः । नमः परमर्षिभ्यो व्याख्यातम् । वाक्याभ्यास उपनिषत्परिसमाप्त्यर्थः ॥ ८ ॥

इति प्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

इति श्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ प्रश्नोपनिषद्दीपिका समाप्ता ॥